# पूर्वपक्षीयव्याप्तिः

https://sa.wikisource.org/s/7x3

॥पूर्वपक्षीयव्याप्तिलक्षणम्॥

पूर्वपक्षीयव्याप्तिलक्षणम्- “साध्याभाववदवृत्तित्वम्”। साध्यं वह्निः, तदभाववान् ह्रदः, तद्वृत्तित्वं मीनशैवालादिषु, अवृत्तित्वं धूमे इति लक्षणसमन्वयः। साध्याभाववन्निरुपितावृत्तित्वं व्याप्तिरिति निष्कृष्टोऽर्थः। एवमुक्तेऽपि “समवायसम्बन्धेन वह्निर्महानसे नास्ति” इति प्रतीत्या वह्न्यभाववान् महानसः तद्वृत्तित्वमेव धूमे इति अव्याप्तिः,तद्वारणाय साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणं दीयते।तथा सति साध्यो वह्निः पर्वते संयोगेन सिषाधयिषितोऽस्तीति साध्यतावच्छेदकसम्बन्धः संयोगः। अतः संयोगसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावो महानसे नास्ति इति नाव्याप्तिः।

एवमुक्तेऽपि- महानसे चत्वरीयवह्निर्वास्ति इति प्रतीत्या (चालनीन्यायेन) महानसे वह्न्यभावं साधयित्वा तद्वृत्तित्वं धूमे इति पुनरव्याप्तिः। तद्वारणाय साध्यतावच्छेदकावच्छिन्नत्वविशेषणं प्रतियोगितायां निवेश्यते।तथा सति महानसे वह्नित्वावच्छिन्नप्रतियोगिताकाभावो नास्तीति नाव्याप्तिः। एवमुक्तेऽपि एतद्वृक्षः कपिसंयोगी एतद्वृक्षत्वादिति सद्धेतौ संयोगाभावस्य वृक्षे सत्त्वात्समवायसम्बन्धावच्छिन्न-संयोगत्वावच्छिन्नसंयोगनिष्ठप्रतियोगिताकाभाववान् वृक्षः तद्वृत्तित्वमेव एतद्वृक्षत्वे इति अव्याप्तिः। तद्वारणाय प्रतियोगिव्यधिकरणविशेषणमभावे निवेश्यते।व्यधिकरणञ्चात्र तदनधिकरणवृत्तित्वम्। तत्पदेन साध्यः कपिसंयोगो गृह्यते। तदधिकरणमेतद्वृक्षः अनधिकरणं गुणः, तद्वृत्तिरभावः संयोगाभावः, तद्वदवृत्तित्वमेतद्वृक्षत्वे इति नाऽव्याप्तिः।

एवमपि “संयोगेन कपिसंयोगो वृक्षे नास्ति” इति प्रतीत्या कपिसंयोगाभाववान् एतद्वृक्षत्वं तद्वृत्तित्वम् एतद्वृक्षत्वे इति पुनरव्याप्तिः। तद्वारणाय प्रतियोगिनिष्ठाधेयतायां प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणं दीयते। स च सम्बन्धः साध्यतावच्छेदकसम्बन्ध एव भवति। एवञ्च समवायसम्बन्धावच्छिन्नसंयोत्वावच्छिन्नप्रतियोगिताकसमवाय-सम्बन्धावच्छिन्नाधेयतावत्प्रतियोगिव्यधिकरणाभाववन्निरुपितवृत्तित्वाभावो व्याप्तिरितिलक्षणमं सम्पन्नम्।

तेन च समवायसम्बन्धावच्छिन्नाधेयतावत्प्रतियोग्यनधिकरणमेतद्वृक्षो न भवतीति नाव्याप्तिः।

एतेनापि विशिष्टसत्त्वावान् जातेः इति व्यभिचारिणि अतिव्यप्तिः। तथाहि- साध्यं विशिष्टसत्ता। विशिष्टशुद्धयोरनतिरेक इति न्यायेन सत्ता एव साध्या। तदभाववत् सामान्यादिकं तदवृत्तित्वञ्च जातौ इति जातौ सत्ताव्याप्यत्वमायातमिति अतिव्याप्तिः। तद्वारणाय प्रतियोगितावच्छेदकावच्छिन्नत्वविशेषणं प्रतियोगिनिष्ठाधेयतायां दीयते। तथा सति विशिष्टसत्तात्वावच्छिन्नाधेयतावत्प्रतियोग्यनधिकरणं गुणः तद्वृत्तित्वमेव जातौ न त्ववृत्तित्वमिति अतिव्याप्तिः वारिता।

एतावता
साध्यतावच्छेदकासंयोगावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्त्यभाववन्निरूपित-हेतुनिष्ठवृत्तित्वाभावो व्याप्तिरिति लक्षणम्।

एवमपि “वह्निमान् धूमादि”त्यत्र वह्निप्रतियोगिकवह्निव्यधिकरणाभावो धूमावयवगतवह्न्यभावः। तद्वान् धूमावयवः तद्वृत्तित्वं धूमे इति सद्धेतावव्याप्तिः। तद्वारणाय वृत्तित्वे हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं दीयते। प्रकृते धूमः संयोगसम्बन्धेन पक्षेऽस्तीति हेतुतावच्छेदकसम्बन्धः संयोगः। धूमावयवनिरूपितं धूमनिष्ठं वृत्तित्वं समवायसम्बन्धावच्छिन्नमिति हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वं धूमावयवनिरुपितं न भवति इति नाऽव्याप्तिः।

एतावदुक्तेऽपि "धूमवान् वह्ने"रिति व्यभिचारस्थलेऽतिव्याप्तिः। तद्यथा- साध्याभाववन्निरूपितो वृत्तित्वप्रतियोगिताकोऽभावो नाम अयोगोलके वृत्तित्वघटोभयन्नास्तीति प्रतीतिसिद्धोऽभावः। अतः साध्यप्रतियोगिक-प्रतियोगिव्यधिकरणाभाववन्निरूपितवृत्तित्वाभावरूपाव्याप्तिः वह्नौ अस्तीति अतिव्याप्तिः। तद्वारणाय वृत्तित्वत्वावच्छिन्नत्वविशेषणं देयम्। तेन 'अयोगोलके वह्निनिष्ठवृत्तित्वं नास्ति' इति प्रतीतिसिद्धौ वृत्तित्वत्वावच्छिन्नवह्निनिष्ठवृत्तित्वप्रतियोगिताकाभावो नास्ति इति व्याप्तिलक्षणं न घटते इति नातिव्याप्तिः। यत्तु अयोगोलके वह्निघटोभयभावमादाय वृत्तित्वनिष्ठप्रतियोगिताकाभावः साधितः स (वृत्तित्वघटो)भयत्वावच्छिन्न-प्रतियोगिताकाभाव इति न दोषः।।।